# आवश्यकं निवेदनम्

महानुभावाः !

बालसंस्कृतस्यायं चतुर्थवर्षस्य पञ्चमोऽङ्कः । पत्रमिदं संस्कृताभ्यासकामानां छात्राणां प्रियम्, बहूनां विदुषां च कृपाभाजनम् ।

विद्वांसः ! 'संस्कृतभाषा खलु निखिलस्यापि भाषाजातस्य जननी' इति जानन्त्येव भवन्तः । सर्वं हि भाषाविश्वं संस्कृतमनुप्राणिति, तद्धि तस्य जीवनम् ।

कृतिनः ! सर्वासामपि भाषाणामध्ययने संस्कृतं साहाय्यकरम्, किं बहुना, शिक्षिते तु संस्कृते 'सर्वं पदं हस्तिपदे निमग्नम्' इति न्यायेन ता अशेषा अपि शिक्षिता भवन्तीति नाविदितं भवताम् । अत एव संस्कृतं सर्वत्र हाईस्कूलेष्वपि पाठ्यविषयीक्रियतेतराम् ।

विपश्चितः ! बालसंस्कृतं नियमेन भवत्सेवासु उपतिष्ठति तथापि बहूनां भवतां शुल्कं न लभ्यते इति चिन्ताकुलीभवति व्ययचिन्तया चित्तम् । शीघ्रमेव भवन्तोऽवशिष्टं शुल्कं प्रदाय अनुगृहीष्यन्तीति प्रार्थयते ।

सम्पादकः



# संस्कृतवर्णमाला

## सूत्राणि

तत्र स्वराः

अ इ उ ण् । ऋ लृ क् । ए ओ ङ् ।
ऐ औ च् ।

व्यञ्जनानि

ह य व र ट् । ल ण् । ञ म ङ ण न म् ।
झ भ ञ् । घ ढ ध ष् । ज ब ग ड द श् ।
ख फ छ ठ थ च ट त व् । क प य् ।
श ष स र् । ह ल् ।

नवीनाः छात्राः संस्कृतवर्णमालासूत्राणीमानि कण्ठे कुर्युः ।

श्रीः

# बालसंस्कृतम्



पुरे ग्रामे गृहे कुट्यां बाले वृद्धे युवस्वपि ।
संस्कृतस्य प्रचाराय प्रभूयाद्बालसंस्कृतम् ॥

११५

| ४ वर्षः | मोहमय्यां संवत् २००९ | ५ अङ्कः |
|---|---|---|

## कृष्णस्तुतिः





इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥



# संस्कृतं संस्कारश्चास्माकम्

सर्वोऽपि चराचरो जीवोजीवोऽपि च पदार्थोऽसंस्कृतः एव जायते जन्मनेति प्रकृतिरेव जगताम् । ततश्च लब्धसंस्कारः स शुद्धो बुद्धः संस्कृतः सभ्यो वा भवति । संजातविशेषसंस्कारा एव विशिष्टां पदवीं लभन्ते व्यक्तयः । अस्माकं पूर्वजैर्दत्तसंस्कारा वयमिदानीं विशिष्टात्मानः स्मः । एवं च लब्धसंस्कारं संस्कृतं वाग्जातं खलु साधनं भारतीयसंस्कृतेः प्रधानमङ्गं च । संस्कृतं नाम पूर्वतनैर्विद्वद्भिः सुचिरं विचार्य कृतम्, स्थास्यति चास्य संस्कारः यावत् सूर्याचन्द्रमसौ लोके । पुरा संस्कृतभाषा एव राजभाषासीत् पुनश्चभविष्यति । साम्प्रतं राष्ट्रभाषायाः हिन्द्या अपीयं सञ्जीविनी । न संस्कृतं विना हिन्दी जीवितु शक्नोतीति जानन्त्येव कृतिनः । सर्वा भारतीया अभारतीयाश्चापि भाषास्तस्या दुहितरः । सर्वत्र प्रतिष्ठिता वर्तते सा प्राणरूपेण । सर्वं भारतीयं शास्त्रजातं संस्कृते एव वर्तते लिखितम् । आगन्तुकैरभारतीयै श्चापि यत्किमपि पल्लवितं तदपि भारतीयमेव संस्कृतमुद्राङ्कितम् । विविधा इह भाषाः संस्कृताज्जाता मृताश्चात्र तज्ज्ञाः प्रमाणम् । वर्धतेऽधुना संस्कृतस्य गौरवं विदेशेष्वपि । पारे समुद्रं चास्ति तत्प्रचारः स्थाने खलु परकृतप्रतिष्ठाभाजः भारतीयाः । लघुता खलु स्वयं स्वगुणाख्यापनम् । नियतमायास्यति प्रतिष्ठा भारतम् । संस्कृतं च नातिचिरादेव राष्ट्रभाषा भविष्यतीति मन्यन्ते मनीषिणः ।

छात्राः ! राष्ट्रभाषाया हिन्द्याः संजीवनाय संस्कृतस्याध्ययनं राष्ट्रियस्य प्रत्येकस्य जनस्य कृते आवश्यकम् । भवन्तः प्रथमं संस्कृतं पठित्वा अन्या भाषाः पठेयुः ।

# सिंहः



चैत्रः—कस्याचित्रमिदम् ?

मैत्रः—इदं सिंहस्य चित्रम् ।

चै. ननु सिंहस्य कानि कानि नामानि ?

मै. मृगेन्द्रः पञ्चाननः हर्यक्षः केसरी हरिः इति सिंहस्य नामानि ।

चैं. ननु सिंहः कस्य पशोः सजातीयः ?

मै. सिंहः मार्जारस्य व्याघ्रस्य च सजातीयः ।

चै. ननु कः भवति व्याघ्रस्य मार्जारस्य वा मृगपतिः ?

मै. स व्याघ्रस्य बन्धुः मार्जारस्य च मातृसौस्रेयः भवति ।

चै. अपि सिंहः भयंकरः बलिष्ठश्च भवति ?

मै. एवम्, स भयंकरः बलिष्ठः दर्शनीयः बुद्धिमान् च भवति ।

चै. ननु कीदृशी आकृतिः मृगेन्द्रस्य ?

मै. तस्यापि सनखाः पादाः व्याघ्रस्येव वर्तुला कराला जटिला च मुखाकृतिः, पिङ्गले ज्वलन्ती च नेत्रे, लम्बं लांगूलं च भवति ।

चै. अपि मृगेन्द्रस्य अग्रकायः गुरुः भवति ?

मै. एवम् , मृगपतेः अग्रकायः गुरुः भवति, विशालं वक्षः, प्रक्षीणा कटिः, सश्मश्रु भयंकरं मुखं च भवति ।

चै. ननु सिंहस्य जिह्वा खरा, दन्ताश्च तीक्ष्णाः, प्रखरनखरौ चाग्रपादौ ?

मै. एवम् , तस्य जिह्वा प्रखराः दन्ताः तीक्ष्णाः, प्रखरनखरौ चाग्रपादौ ।

च. ननु केन हेतुना केशरी कथ्यते सिंहः ?

मै. तस्य स्कन्धयोः ग्रीवायां च लम्बाः केशराः भवन्तीति जनास्तं केशरिणं कथयन्ति ।

च. ननु कुत्र जायन्ते सिंहाः ?

मै. सिंहाः हिमालयोपत्यकासु सौराष्ट्रवनेषु अफ्रीकारण्येषु पारसीकजङ्गलेषु च जायन्ते ।

चै. ननु कुत्रत्याः सिंहाः बलिष्ठाः दर्शनीयाश्च भवन्ति ?

मै. अफ्रीकाभवाः सिंहाः बलिष्ठाः दर्शनीयाश्च भवन्ति ।

चै. ननु कुत्र निवसन्ति सिंहाः ?

मै. सिंहाः महावनेषु एकाकिनः एव निवसन्ति ।

चै. अपि सिंहस्त्री मार्जारीव वर्षं वर्षं प्रति प्रसूते ?

मै. नहि नहि सिंहिन्यः खलु विरलप्रसूतयः भवन्ति, परमशोभनाश्च भवन्ति मृगेन्द्रपोताः ।

चै. ननु भोजनाभिलाषी सिंहः किं करोति ?

मै. भोजनाभिलाषी स प्रथमं गर्जति । तस्य गर्जनां श्रुत्वा जन्तवः पलायन्ते । स पलायमानेषु तेषु कमपि आक्रमते हत्वा च खादति ।

चै. ननु कान् कान् जन्तून् मारयति सिंहः ?

मै. न स कस्मादपि बिभेति । मृगयाप्रवृत्तः स हरिणान् गाः महिषान् गवयान् गर्दभान् गजेन्द्रानपि च निहन्ति ।

चै. अपि मानवान् हन्ति मृगेन्द्रः ?

मै. स तस्य विषये चरतः मानवानपि व्यापाद्य भक्षयति ।

चै. ननु कदा आखेटं करोति सिंहः ?

मै. सिंहः दिवा शेते रात्रौ चाखेटं करोति । स भानोः आतपं सोढुं न शक्नोति ।

चै. ननु सिंहस्यापि आखेटं कुर्वन्ति जनाः ?

मै. एवम्, जनाः सिंहस्यापि आखेटं कुर्वन्ति । तेन शूरभावः जागर्ति तेषाम् ।

चै. ननु केन शस्त्रेण जनाः मृगेन्द्रं निघ्नन्ति ?

मै. ते पुरा शरैः सिंहान् जघ्नुः । इदानीम् आग्नेयास्त्रेण तान् घ्नन्ति ।

चै. ननु सन्ति मानुषाः तादृशः सुबुद्धयः ये वन्यान् सिंहसदृशः पशूनपि विनयेरन् ?

मैं एवम्, सन्ति जनाः तादृशः अपि सुबुद्धयः ये सिंहान् विनयन्ते । विनीतास्ते रङ्गभूमौ खेलन्तः युष्माभिः दृष्टाः स्युः ।

चै. अपि पोष्यतां न सहते मृगपतिः ?

मै. नहि स पोष्यतां न सहते मनागपि । जनास्तं हठात् पञ्जरेषु प्रति पालयन्ते । तत्रापि स गर्जन् लोकान् भाययति ।

च. ननु सन्ति सिंहाः जनानामुपयोगिनः ?

मैं. नहि नहि, न कदापि ते जनानामुपयोगिनः, अपि तु वैरिणः, तथापि ते मानिनां महतां वीराणां च कृते शौर्ये निदर्शनभूताः सन्ति ।

चै. अपि सिंहाः अभिमानिनः भवन्ति ?

मैं. एवम्, ते परमाभिमानिनः भवन्ति । एकस्मिन् वने एक एव सिंहः निवसति । न स स्वविषयेषु अपर-मृगेन्द्रगन्धमपि सहते ।

चै. अपि सिंहः मृगाणां राजा भवति ?

मैं. एवम्, स अनभिषिक्तः एव राजा भवति मृगाणाम्, श्रेष्ठतमस्तेषु, सत्याभिमानः तेषां राशीभूतं गौरवं च ।

अत एवेदमुच्यते—

सदाऽमन्दमदस्यन्दिमातङ्गपिशिताशनः ।
अलब्धाभीष्टभक्ष्योऽपि तृणमत्ति न केशरी ॥

# शुकः



देवेन्द्रः—कस्य चित्रमिदम् ?

राजेन्द्रः—इदं शुकस्य चित्रम् ।

दे. कानि कानि नामानि शुकस्य ?

रा. तं जनाः कीरं किंकिरातं वक्रतुण्डं च कथयन्ति ।

दे. कीदृक् भवति शुकस्य तुण्डम् ?

रा. शुकस्य तुण्डं रक्तवर्णं भवति ।

दे. अपि त्रिवर्णाभिः रेखाभिः शोभते शुकस्य कण्ठम् ?

रा. एवम् , त्रिवर्णाभिः ताभिः शोभते तस्य तत् ।

दे. नुन कीदृक् भवति शुकस्य पुच्छं पक्षतिश्च ?

रा. तस्य पुच्छं ह्रस्वं पक्षतिश्च हरितवर्णा भवति ।

दे. कुत्र जायन्ते शुकानां जातयः ?

रा. सर्वत्र भारते खलु जायन्ते शुकांनां जातयः ।

दे. के के भेदाः भवन्ति कीराणाम् ?

रा. ते लघवः विशालाः रक्ताः कर्बुराश्च भवन्ति ।

दे नतु किं किं खादन्ति वक्र तुण्डाः ?

रा. ते फलानि धान्यानि बीजानि क्षुद्रकीटानपि च खादन्ति ।

दे. कुत्र निवसन्ति तावत् किंकिराताः ?

रा. ते वनेषु उपवनेषु पुराणतरुकोटरेषु च निवसन्ति ।

दे किन्नु बुद्धिमान् श्रुतग्रही वा भवति शुकः ?

रा एवम्, शुकः बुद्धिमान् श्रुतग्राही च भवति ।

दे. अपि स संस्कृतं पठितुं शक्नोति ?

रा. एवम्, स संस्कृतं पठितुं शक्नोति ।

दे. अपि शुकः सुभाषितानि भणति ?

रा. एवम्, स सुभाषितानि भणति ।

दे. अपि गीतानि गातुं पारयति शुकः ?

रा. एवम्, शिक्षितः स मधुराणि गीतानि गायति ।

दे आः ज्ञातं मया, अत एव जनाः तान् पञ्जरेषु बध्नन्ति ।

रा. आम्, अनेनैव हेतुना जनास्तान् पञ्जरेषु बध्नन्ति ।

अत एव स्तुवन्ति कवयः–

अखिलेषु विहङ्गेषु हन्त स्वच्छदचारिषु ।<br>
शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥

---

## सूचना

ये ग्राहका बालसंस्कृतस्य अङ्कान् समये न लभेरन्, ते त्वरितं कार्यालये पत्रं लिखेयुः । विलम्बेन लिखितं पत्रं निष्फलं स्यात् ।

सम्पादकः

# कोकिलः

रमेशः—अपि त्वया कोकिलः दृष्टः ?

सुरेशः—एवम्, मया कोकिलः दृष्टः। स नित्यं प्रातः उपवने कूजति।

र. कानि नामानि सन्ति तावत् कोकिलस्य ?

सु. पिकः परभृतः वनप्रियः इति सन्ति कोकिलस्य नामानि

र. का आकृतिः भवति कोकिलस्य ?

सु. कोकिलः काकः इव कृष्णः भवति। तस्य सान्द्रनीला पक्षतिः, दृढा चञ्चुः असौम्यौ पादौ, लम्बमानं पुच्छं च भवति।

र. अपि कोकिलः नीडं करोति ?

सु. नहि, स नीडं न करोति। स नित्यं पर्यटनशीलः उपवनात् उपवनम्, वृक्षात् वृक्षं चोत्पतति।

र. ननु कस्मिन् ऋतौ कोकिलः दृष्टिगोचरः भवति।

सु. अन्यत्र वसन्तात् कोकिलः दृष्टिपथं न समायाति ?

र. ननु कोकिलः अपि काक इव यूथान् कृत्वा निवसति।

सु. नहि नहि, न स कदापि सेवते समवायम्, स सदैव एकाकी एव विचरति।

र. ननु ग्रामेषु वनेषु वा निवसन्ति कोकिलाः ?

सु. कोकिलाः सदैव वनेषु उपवनेषु वा निवसन्ति।

र. ननु कस्मिन् देशे कोकिलाः संभवन्ति ?

सु. ते खलु सर्वत्रैव भुवस्तले संभवन्ति गुणिनः जना इव विरलाः ।

र. ननु भवति कोकिलस्य जातिभेदः वर्णभेदः वा ?

सु. नहि, कोकिलस्य जातिभेदः वर्णभेदः वा न भवति ।

र. ननु कस्मिन् ऋतौ कोकिलः माद्यति ?

सु. कोकिलः वसन्ते माद्यति । तदा स गायति हृष्यति पुष्यति चूषति च सहकारमञ्जरीः ।

र. ननु किं किं खादन्ति कोकिलाः ?

सु. ते आम्रफलानि लघून् वन्यकीटान् विविधानि बीजानि च खादन्ति ।

र. ननु केन गुणेन कोकिलः जनानां प्रियः संजायते ?

सु. कृष्णवर्णः अपि कोकिलः मधुरया कोमलया वाचा लोकानां प्रियः संजायते । स प्रातरेव वसति प्रतिवेशिषु गृहोपवनेषु पुष्पोद्यानेषु फलवत्सु तरुषु वा समुपविष्टः शीतलं मन्दं सुगन्ध च पवनं सेवमानः मधुराः काकलीः पञ्चमेन स्वरेण कलयति सुखयति च जनानां चेतांसि ।

र. अपि कुलायं कुर्वन्ति कोकिलस्त्रियः ?

सु. न हि ताः कुर्वन्ति कदाचित् कुलायम् । ताः काकीनाम् अण्डानि पातयित्वा तासां नीडेषु स्वकीयानि तानि निदधति । ताः अपि स्वसदृशानि तानि स्वीयानि इति मत्वा यावत् संजातपक्षान् पिकशावकान् पुष्णन्ति ।

र. आः अवगतमिदानीम्, अत एव छद्मपुष्टानां पिकानां परभृतः इति जायते नामधेयम्। ननु सहते पोष्यतां कोकिलः ?

सु. कोकिलः पोष्यतां न सहते तथापि रञ्जयति कुहूमुखेन संगीतेन जनानां मनांसि। अर्हति च कण्ठमाधुर्येण गायकानामुपाध्यायपदम्, विनोदयति यूनां मनांसि लास्यैः, पाठयतीव च बालान् प्रियवचनानि।

इदमत्रोच्यते--

काकं द्वेष्टि लोकोऽयं किं स कस्यापि पितृहा।
पिकः प्रियवचनः कस्मै किं नु यच्छति मोदकम् ॥

## मयूरः



देवदत्तः--चित्रे कं शकुन्तं पश्यसि ?
यज्ञदत्तः-अहं चित्रे मयूरं पश्यामि।

दे. मयूरस्य अन्यानि कानि नामानि सन्ति ?

य. मयूरः बर्हिणः बर्हीं नीलकण्ठः भुजङ्गभुक् शिखावलः शिखी केकी मेघनादानुलासी चेति मयूरस्य नामानि सन्ति ।

दे. अपि प्रत्यक्षं दृष्टः त्वया मयूरः ?

य. एवम्, मया मयूरः प्रत्यक्षं दृष्टः ।

दे. तर्हि वर्णय मयूरस्य स्वरूपम् !

य. मयूरस्य आयतं मेचकं नीलं कण्ठम्, सचञ्चु मञ्जुलं मुखम्, शिरसि मुकुटलक्षणा शोभना शिखा सान्द्रनीलं पक्षयुगलम्, सचन्द्रकं पिच्छं च सुतरां चेतांसि समाकर्षति पश्यतां जनानाम् ।

दे. ननु उड्डयनपक्षाभ्यां व्यतिरिक्तानि अपि भवन्ति पतत्राणि मयूराणाम् ?

य. एवम्, भवन्ति तेषां मेचकवर्णानि तानि पिच्छानीति कथ्यन्ते ?

दे. ननु अन्येऽपि पक्षिणः त्वया दृष्टाः ?

य. एवम्, मया अन्येऽपि बहवः पक्षिणः दृष्टाः, यथा-शुकः पिकः श्येनः चिल्लः गृध्रः वर्तकः तित्तिरः टिट्टिभः सारसः चक्रवाकः वर्तकश्च ।

दे. ननु पक्षिणां गृहं किमुच्यते ?

य. पक्षिणां गृहं कुलायः नीडं वेत्युच्यते ।

दे. अपि सर्वे खगाः नीडानि कुर्वते ?

य. नहि, सर्वे खगाः नीडानि नकुर्वते। तेषु केचिन्नीडानि कुर्वन्ति, केचित् खातेषु वसन्ति, अन्ये च वृक्षान् आश्रित्य जीवन्ति ।

दे. ननु खगानां तुण्डं किमुच्यते ?

य. खगानां तुण्डं चञ्चुः त्रोटिश्च प्रोच्यते ।

दे. अपि मयूरः सर्वेषु पक्षिषु मनोहरतमः ?

य. एवम् , स सर्वेषु पक्षिषु मनोहरतमः अत एव तस्य शिरसि राजचिह्नं मुकुटं शोभते ।

दे. ननु मयूरस्य वाणी कीदृशी का च ?

य. मयूरस्य वाणी मधुरा सा केका इत्युच्यते ।

दे. कुत्र जायन्ते तावत् मयूराः ?

य. मयूराः सर्वत्र जायन्ते तथापि भारतेऽस्माकं मनोहरतमाः मयूराः भवन्ति ।

दे. ननु किं किं खादन्ति मयूराः ?

य. ते धान्यम् , फलानि , वन्यबीजानि विविधान् सरीसृपान् , कीटांश्च खादन्ति ।

दे. ननु कुत्र निवसन्ति केकिनः ?

य. ते प्रायः वनेषु एव निवसन्ति । क्वचित् क्वचित् उद्यानेषु नृपप्रासादेषु च पालिता अपि जायन्ते ।

दे. अपि व्याघ्रा वृका शृगालाश्च मयूराणां वैरिणः ?

य. एवम् , व्याघ्राः वृकाः शृगालाः कुक्कुराश्चापि तेषां वैरिणः भवन्ति । ते तान् व्यापाद्य भक्षयन्ति ।

दे. अपि मयूरः नीडं करोति ?

य. नहि मयूरः नीडं न करोति । स वृक्षशाखासु एव दिवा विरमति शेते च रात्रौ ।

दे. अपि घनगर्जितं मयूराणां प्रियं भवति ?

य. एवम्, घनगर्जितं मयूराणां प्रियं भवति । तत् श्रुत्वा ते प्रसन्नाः सन्तः तारस्वरेण केकां कर्त्तुं प्रारभन्ते नृत्यन्ति च प्रसार्य बर्हाणि ।

दे. ननु मयूराः सर्पाणां वैरिणः भवन्ति ?

य. एवम्, ते सर्पाणां वैरिणः भवन्ति, तान् व्यापाद्य खादन्ति च ।

दे. ननु मयूरीणामपि भवन्ति मुकुटानि ?

य. नहि तासां मुकुटानि बर्हाणि चापि न भवन्ति ।

दे. कदा ताः अण्डानि ददति ?

य. ताः चैत्रे वैशाखे वा अण्डानि ददति सेवन्ते च शावकान् ।

दे. अपि कुलायेषु अण्डानि निदधति मयूरकामिन्यः ?

य. नहि ताः कुलायं न कुर्वन्ति । ताः मृदुभूमौ गर्त्तं कृत्वा तत्र च अण्डानि निधाय सेवन्ते ।

दे. अपि मयूरः पवित्रतमः शकुन्तः ?

य. एवम्, मयूरः पवित्रतमः । स देवसेनापतेः षडाननस्य सरस्वत्याश्च वाहनम् । भगवान् श्रीकृष्णः अपि तस्य पिच्छानि मुकुटे दधाति ।

दे. ननु मयूरस्य पिच्छैः अन्यानि अपि वस्तूनि क्रियन्ते ?

य. एवम् , मयूरस्य पिच्छैः वीजनादीनि अन्यानि अपि उपयोगीनि वस्तूनि क्रियन्ते ।

दे. ननु मयूरे बहवः सन्ति गुणाः ?

य. अत्र कः संदेहः । गुणानामाकरः खलु मयूरः । अत उच्यते-

केका ते जयिनी चित्रकलापिन् ! नीलकण्ठता ।
मैत्री मेघैरहिद्वेषो नाल्पस्य तपसः फलम् ॥

## कपोतः



देवेन्द्रः—कस्य शकुन्तस्य चित्रमिदम् ?

राजेन्द्रः- इदं तावत् कपोतस्य चित्रम् ।

दे० ननु जानासि त्वं कपोतम् ?

रा० एवम् , अहं कपोतं सम्यक् जानामि ।

दे० कुत्र दृष्टः त्वया कपोतः ?

रा० नित्यं प्रातः ममाङ्गणे बहवः कपोताः आयान्ति । अहं तेभ्यः धान्यबीजानि यच्छामि ।

दे० तर्हि कपोतस्य परिचयं देहि ।

रा० शृणु तावत्--कपोतस्य सनखौ पादौ, सुदृढौ पक्षौ, लघुनी नेत्रे, मञ्जुला चञ्चुश्च भवति ।

दे० कानि कानि पर्यायवचनानि कपोतस्य ?

रा० कपोतः पारवतः कलरवश्च कथ्यते ।

दे० ननु के भेदाः कपोतानाम् ?

रा० कपोताः खलु सिताः असिताः धूसराः कर्बुराः नीलाः लम्बपुच्छा लघुपुच्छाश्च भवन्ति ।

दे० ननु कुत्र जायते कपोतः ?

रा० कपोतः सर्वत्र जायते । तथापि राजस्थाने मरुभूमौ च सातिशयं वर्धतेऽस्य जातिः । तत्रत्याः जनाः कपोतान् पुष्णन्ति, रक्षन्ति, न च तन्मांसं भक्षयन्ति

दे० ननु किं किं भक्षयति कपोतः ?

रा० स नानाविधानि बीजानि भक्षयति, न स जातु कीटान् खादति । स सरलः अहिंसकश्च ।

दे० अपि विशेषः कश्चित् कपोतस्य भक्षणप्रकारः ?

रा० एवम्, कपोतस्य भक्षणप्रकारः विचित्र एव । स आहार्थी निकायं हित्वा क्षेत्रं गच्छति, ततः बीजानि चेत्वा गलनलिकाकोषे गृह्णाति, पुनः उड्डीय नीडम् आश्रयते, तत्र च सुखेन आस्थाय तानि सकलानि निगिलति ।

दे० ननु प्रचण्डः भवति कपोतानां जाठरानलः ?

रा० एवम्, परमः प्रचण्डः भवति कपोतानां जाठरानलः।

दे० ननु समवायेषु निवसन्ति कपोताः ?

रा० एवम्, कपोताः समवायेषु निवसन्ति। न ते कदापि एकाकिनः चरन्ति। तेषां समवायेषु कश्चिन् मुख्यः भवति। तं चान्ये अनुगच्छन्ति।

दे० अपि नीडप्रियाः भवन्ति कपोताः ?

रा० एवम्, ते नीडप्रियाः भवन्ति। आहारार्थं दूरं गता अपि त्वरितास्ते नीडं प्रति निवर्तन्ते तत्र स्थिताश्च सुख-मनुभवन्ति।

दे० ननु जनाः पालयन्ति कपोतान् ?

रा० एवम्, जनाः कपोतान् पालयन्ति। कपोताः पाल-केषु स्निह्यन्ति तान् अनुवर्तन्ते च।

दे० ननु कपोताः क्रीडाप्रियाः विलासिनश्च भवन्ति ?

रा० एवम्, कामं विलासिनः क्रीडाप्रियाश्च भवन्ति पारा-वताः। ते अव्यक्तमधुरं शब्दायमानाः नृत्यन्ति गायन्ति विलसन्ति रमन्ते च कपोतिकाभिः स्वैरम्।

दे० ननु कपोती अण्डानि ददाति ?

रा० एवम्, सा अण्डानि ददाति। तेभ्यः द्वौ त्रयः वा शावकाः जायन्ते।

दे० अपि विनेतुं पाठितुं वा शक्यते कपोतः ?

रा० कपोतः विनेतुं शक्यते, न पाठितुम्। विनीतः सः अभि-प्रायम् अवगच्छति, आदेशम् अनुसरति, व्यवहारं

प्रदर्शयति, पत्राणि प्रापयति, अर्थं समर्पयति, संकेतं ददाति प्रतिगृह्णाति च ।

दे० ननु पुरा कपोताः संदेशहराः दूताः अभूवन् ?

रा० एवम्, पुरा ते संदेशपत्राणि प्रापयाम्बभूवुः । राजानः महान्तश्च तान् कपोतपालीषु पालयामासुः ।

इदमत्रास्य स्वभावनिर्देशः—

कणोञ्छवृत्तिरारण्योऽक्रूरः साधुरहिंसकः ।
कपोतः स्वैर्गुणैर्नित्यं पोषणं लभते जनात् ॥

## काकः

रमेशः—अपि त्वया काकः अवलोकितः ?

सुरेशः—एवम्, अवलोकितः मया काकः ।

र. अपि जानासि काकस्य नामानि ?

सु. एवम्, जानामि, काकः करटः वायसः ध्वांक्षः बलिभुक् अरिष्टश्चेति काकस्य नामानि ?

र. ननु कीदृशी भवति काकस्य आकृतिः ।

सु. काकः कृष्णः कदाकारः दृढपक्षः चण्डचञ्चुः कुपादश्च भवति ।

र. ननु कुत्र जायन्ते काकाः ?

सु. काकाः कापुरुषा इव सर्वत्रैव सुलभाः । ते शैत्यप्रा-

धान्येषु देशेषु वहुधा न भवन्ति । ते मध्यभारते ब्रह्मावर्ते आर्यावर्ते वंगप्रान्ते बिहारे च बाहुल्येन संभवन्ति ।

र. ननु कीदृक् स्वभावः भवति वायसस्य ?

सु. वायसः दुःस्वभावः । स खरस्वरः गृद्धनुः घस्मरः सर्वभक्षी च भवति ।

र. कानि कानि वस्तूनि खादति काकः ?

सु. स सर्वाणि धान्यबीजानि, सिद्धभोजनानि विविधानि फलानि, यथा लाभं मिष्टान्नानि निम्बफलानि च सौख्येन खादति ।

र. ननु अमेध्यानि अपि वस्तूनि खादति काकः ?

सु. एवम्, काकः अमेध्यानि वस्तूनि पूतिमांसं गूथादिकं चापि खादति ।

र. ननु खगेषु वायसः धूर्त्तः भवति ?

सु. एवम्, वायसः खगेषु धूर्त्तः भवति अविवेकी दुष्टश्च ।

र. कानि कानि दुष्टकर्माणि करोति वायसः ?

सु. अयं चञ्च्वा अमेध्यानि वस्तूनि स्पृशति, पुनश्च गृहेषु प्रविश्य पवित्रं जलं दुग्धं अन्यानि च भोजनद्रव्याणि तथैव स्पृशन् अपावयति ।

र. ननु कुत्र कथं च निवसन्ति काकाः ?

सु. काकाः खलु उच्छ्रितशाखिनां शाखासु कुलायान् कृत्वा यूथशः निवसन्ति ।

र. अपि काकः पिकः इव एकाकी विचरति ?

सु. नहि नहि, न स कदापि एकाकी विचरति। काकानां कुलानि एव बहुधा दृष्टिगोचराणि भवन्ति।

र. ननु यूथभ्रष्टः काकः किं करोति ?

सु. यूथभ्रष्टः काकः क्रेङ्कारं करोति। तस्य शब्दं श्रुत्वा त्वरितमेवान्ये तमुपतिष्ठन्ति।

र. ननु काकाः विपत्समये अन्योन्येषां साहाय्यं कुर्वन्ति ?

सु. एवम्, काकाः विपत्समये परस्परं साहाय्यं कुर्वन्ति।

र. अपि संशयात्मा भवति वायसः ?

सु. एवम्, वायसः परमः संशयात्मा भवति। स नित्यं जागरूकः श्रमशीलश्च भवति।

र. अपि काकाः बुद्धिमान् शठश्च भवति ?

सु. एवम्, स अतिमात्रं बुद्धिमान् शठतमश्च। न स कदाचित् वागुरिकाणां वागुरासु पतति। बहुधा स वृक्षछायासु सुप्तानां जनानाम् उपरि पुरीषोत्सर्गं कृत्वा तान् दुनोति।

र. अपि दीर्घायुषः भवन्ति काकाः ?

सु. कथं न, सर्वोऽपि परपरितापी भवत्येव दीर्घायुः।

र. अपि काकाः कुर्वन्ति जनानामुपकारम् ?

सु. एवम्, ते चाण्डालाः इव गृहपरिसरेषु पतितानि अमेध्यवस्तूनि थूत्कारं शिशूचारं पूतिमांसादीनि च भुक्त्वा शुद्धिं सम्पादयन्ति।

र. ननु काकाः सम्भूय प्रातः जल्पन्तीति कः हेतुः ?

सु. एवं ते प्रातः अलसान् जनान् उद्बोधयन्ति प्रेरयन्ति च कर्माणि कर्तुम् । कवयस्त्वेवमुत्प्रेक्षन्ते–

तिमिरारिस्तमो हन्ति तेन शङ्कितमानसाः ।
वयं काका वयं काकाः प्रजल्पान्ति प्रगे द्विकाः ॥

## उलूकः

—१—



माधवः—ननु माधव ! परिचिनोषि उलूकम् ?

मुकुन्दः—एवम्, मुकन्द ! अहं उलूकं परिचिनोमि । मया स चित्रे दृष्टः ।

मा. ननु कीदृशः सः ? कदा च विचरति ?

मु. स भयंकराकृतिः भवति, विचरति च रात्रौ ।

मा. वर्णय तावत् उलूकस्य आकृतिम् ।

मु. श्रृणु, तस्य विशालं गोलाकारं शिरः, ज्वलन्ती इव भयावहे जिह्मे नेत्रे, उत्थितौ कर्णौ, सन्ना वक्रा च नासिका, दृढा भुग्ना त्रोटिश्च !

मा. उलूकस्य कानि कानि नामानि ?

मु. उलूकः वायसारातिः पेचकश्चोच्यते ।

मा. ननु उलूकः वायसानां शत्रुः ?

मु. एवम्, स वायसानां शत्रुः । स तान् व्यापाद्य खादति ।

मा. अपि उलूकः आखेटी खगः ?

मु. एवम्, उलूकः आखेटं करोति । स मूषकान् जतूकान् काकान् भेकान् चटकान् विविधानि फलानि च खादति ।

मा. ननु पेचकः दिवा न पश्यति ?

मु. एवम्, स दिवा न पश्यति । स भानोः आतपं सोढुं न क्षमते । दिवा स सान्धकारासु गुहासु तरूणां कोटरेषु वा शेते, भ्रमति च रात्रौ आहारार्थम् ।

मा. अपि उलूकः दिवान्धः ? अपि स मांसादः ?

मु. एवम, स दिवान्धः रात्रिंचरश्च । स मांसादः हिंसकः बालिशः दुर्दर्शनश्च ।

मा. ननु भीषयन्ति पेचकाः जनान् ?

मु. एवम, अनेकदा ते वसतेः आसन्नवृक्षेषु उपविश्य गृहेस्थितान् परस्परं भाषमाणान् जनान् बालकान् च सनामग्राहमनुभाषन्ते । तेन जनाः भीता भवन्ति ।

मा. ननु उलूकः काकानां शत्रुः भवति ?

मु. एवम्, स काकानां परमः शत्रुः भवति ? स काकं दृष्ट्वा कुप्यति हन्ति च तम् । न स कदापि खादति काकमांसम् ।

मा. ननु लज्जते बिभेति वा काकारातिः मनुष्येभ्यः ?

मु. एवम्, स मनुष्येभ्यः लज्जते बिभेति पलायते च न स कदाचित् जनवसतेः आरात् निवसति ।

मा. ननु कथं नाम स्खलतः अस्मान् अध्यापकाः उल्लूकान् कथयन्ति ।

मु. उल्लूकः मूर्खः भवति । यदा वयं मूर्खा इव आचरामः, तदा ते अस्मान् उल्लूकशब्देन उपालभन्ते ।

मा. ननु जतूका अपि रात्रौ उड्डीयन्ते, सन्ति किं तेऽपि उलूकानां बान्धवाः ?

मु. न ते उलूकानां बान्धवाः सन्ति । ते उलूका इव भयंकरा अपि न भवन्ति ।

मा. अपि भवति पेचकानां जातिभेदः ?

मु. एवम्, भवति तेषां जातिभेदः ।

एका तेषां लघ्वी जातिः भवति । या दिवापि पश्यति चरति च रात्रावपि, पर्यटति च सान्द्रेषु वृक्षेषु कदाचित् प्रातः सायं च ।

मा. ननु सहते पोषणं काकारातिः ?

मु. कथं नु अनिष्टदर्शनस्य भयंकरस्य पापस्य तस्य जनः पोषणं कुर्यात् ? कथं वापि स खगाधमः पोषणं सहेत ।

अयमत्रास्य स्वरूपनिर्देशः—

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम् ।
अक्रुद्धस्येदृशं रूपं भवेत्क्रुद्धस्य कीदृशम् ॥

# मधुमक्षिका

रमेशः– आगच्छ मित्र ! अद्य पुष्पोद्याने विहरावः ?

सुरेशः–अवश्यम् , श्रेयः खलु वसन्तेऽत्र भ्रमणम् ।

र. पश्य ! तत्र वृक्षस्य शाखायां लम्बमानं छत्राकम् । कस्य तत् ?

सु. संभवति तद् वरटानां छत्राकम् ।

र. निपुणं पश्य । न तद् वरटानां छत्रम् । तद्धि चषालं मधुमक्षिकाणाम् । ननु जानासि तासां नामानि ?

सु. एवम् , सरघामधुमक्षिका मधूलिका चेति तासां नामानि मया अमरकोशे पठितानि ।

र. अहो ! विचित्रा खलु रचना विधातुः । न ताः वरटा नापि च गृहभवा दुराचारा नीलमक्षिकाः । ता हि काचन पवित्रा निपुणाश्च भवितुमर्हन्ति । पश्यसि तासामाकृतिः ?

सु. निपुणं पश्यामि । इयमेका गृहीता मया । अस्याः मुखे पुच्छे च दंशः वर्तते, षट् पादाः, पक्षति युगलं च

र. अपि वर्णभेदो जातिभेदो वा भवति सरघाणाम् ।

सु. आम् , भवति तासां जातिभेदः वर्णभेदश्चापि । ताः धूसरवर्णा भ्रमर्यः भवन्ति, या क्वचिदेव घनारण्येषु लभ्यन्ते । अन्याः कृष्णवर्णा भवन्ति या सर्वत्र जायन्ते । जनाः ताः क्षुद्राः कथयन्ति ।

र. ननु क्व निवसन्ति सरघाः ?

सु. ताः अरण्येषु पुष्पवाटिकासु फलोद्यानेषु महावृक्ष-कोटरेषु पर्वतगुहासु कन्दरासु च छत्राकान् कृत्वा निवसन्ति ।

र. अपि भवति कर्मणापि भेदः मधूलिकानाम् ?

सु. आम् , तासां कर्मणापि त्रयो वर्गाः भवन्ति । प्रथमे वर्गे जनन्यः, या केवलमण्डानि प्रसुवते पुष्णन्ति च शावकान् । द्वितीये वर्गे पुंसरघाः भवन्ति । ते पर-मालसा विलासिनश्च भवन्ति । न ते कुर्वन्ति कर्माणि-तृतीये तु वर्गे कर्मकर्यः मधुकर्यः भवन्ति, याः सततमु-द्योगपराः नित्यं मधुसञ्चये व्यापृताः तिष्ठन्ति ।

र. ननु कदा मधुमक्षिका मधूनि सञ्चिन्वन्ति ?

सु. वसन्ते यदा वनानि उद्यानानि च पुष्पितानि संजा-यन्ते तदा ताः मधुसंञ्चयं कुर्वन्ति ।

र. क्व ताः छत्राकान् कुर्वन्ति ?

सु. ता निराबाधेषु दुरासदस्थानेषु छत्राकान् कुर्वन्ति ।

र. ननु कुतः किमर्थं च ताः कुर्वन्ति मधुसञ्चयम् , ?

सु. ताः सर्वविधेभ्यः पुष्पेभ्यः मधुसञ्चयं कुर्वन्ति । मधु तासां भोजनम् । शिशिरहेमन्तयोः प्रावृषि च यदा पुष्पाणि प्राचुर्येण न विकसन्ति तदा ताः संञ्चितं मधु आस्वाद्य जीवन्ति ।

र. अपि जनाः सरघाभिः संचितं मधु अपहरन्ति ?

सु. एवम् , जाङ्गलाः भिल्लाः अपहरन्ति तासां संचितानि मधूनि ।

र. ननु दंशवतीनां तासां मधूनि कथमपहरेयुः जनाः । ता दंशैः तान् कुतः न हन्युः ?

सु. घ्नन्ति ताः दंशैः स्वशत्रून् । तथापि विधिज्ञाः जनाः धूमेन ताः दूरीकृत्य मधूनि हरन्ति ।

र. ननु केन द्रव्येण गृहाणि कुर्वन्ति सरघाः ?

सु. ताः सञ्चितेन पुष्पाणां परागेण कुर्वन्ति गृहाणि ।

र. ननु कान् कान् उपकारान् कुर्वन्ति मधुकर्यः जनानाम् ?

सु. ताः मधूनि सिक्थं चोत्पाद्य ददति जनेभ्यः ।

र. ननु किं गुणं भवति मधु, किं च तस्य प्रयोजनम् ?

सु. मधु मधुरं, पौष्टिकम् , स्वादिष्टम् , त्रिदोषघ्नम्, रसायनम् नयनामयनाशनं च भवति । तदौषधेषु प्रयुज्यते अनुपीयते च ।

र. ननु सिक्थस्य किं प्रयोजनम् ?

सु. सिक्थमपि भेषजेषु प्रयुज्यते । तस्यापि बहूनि नित्योपगीनि वस्तूनि क्रियन्ते ।

र. ननु अन्यदपि किमपि प्राकृतं कर्म सरघाः ।

सु. एवम् , ताः खलु पुष्पाणां परागान् आदाय पुष्पान्तरेषु संघटयन्ति तत्तद्रजांसि वीर्येण, येन च फलप्रसूत्या विवर्धन्ते तत्तत्पुष्पकुलानि फलन्ति च ।

र. अहो ! नैपुण्यं मधुकरीणाम् ?

सु. नात्र संदेहः, ताः लोकोत्तरकर्मशीलिन्यः निपुणाश्च भवन्ति । ताः जनानां कृते आदर्शमात्मानमुपस्थापयन्ति । यदि जनाः सरघा इव उद्योगशीलाः निपुणाश्च स्युः, न ते कदाचिदपि दुःखभाजः भवेयुः ।

तासां विवेकविषये चेत्थमुच्यते--

दलानां च फलानां च सन्तु चान्ये विवेकिनः ।
पुष्पसारपरार्थास्तु सरघाः सन्ति केवलाः ॥



## सर्पः





हरिः—कस्य जन्तोः चित्रमिदम् ?

गणेशः—न जानासि किम, अयं हि चित्रार्पितः सर्पः ।

ह. अहो ! चित्राङ्कितः अपि नायं भयंकरतां जहाति ?

ग. सत्यमेष नाम्नापि भयंकरः । ननु मृत्युरेव साक्षादयम् ।

ह. सन्ति किं सर्पाणामपि संस्कृतानि नामानि ?

ग. एवम् , भुजगः भुजङ्गः भुजङ्गमः पृदाकुः अहिः आशीविषः विषधरः चक्री व्यालः सरीसृपः कुण्डली गूढपादः चक्षुःश्रवा काकोदरः फणी दर्वीकरः दीर्घ-पृष्ठः दन्दशूकः विलेशयः उरगः पन्नगः भोगी जिह्मगः पवनाशनः इति सर्पस्य नामानि ।

ह. ननु कीदृक् शरीरं भुजंगमस्य ?

ग. भुजंगमस्य शरीरं रज्ज्वाकृति मृदुलास्थिबन्धं श्लक्ष्णमावर्तनीयं वर्तुलमायतं च भवति ।

ह. ननु केन हेतुना कुण्डली चक्री वा कथ्यते सर्पः ?

ग. बहुधा स शरीरं कुण्डलीकृत्य तिष्ठतीति तं जनाः कुण्डलिनं चक्रिणं वा कथयन्ति ।

ह. किं सर्पस्य पादा न भवन्ति ?

ग. नहि, सर्पस्य पादा न भवन्ति, तथापि वेगेन धावते अत एव स गूढपाद् इत्युच्यते ।

ह. अपि सर्पस्य मुखे दन्ता भवन्ति ?

ग. एवम् , तस्य मुखे तीक्ष्णा दन्ता भवन्ति ।

ह. नु विषधरः उच्यते सर्पः, क्व वर्तते तस्य विषग्रन्थिः ?

ग. नूनं स विषधरः । तेन दष्टः जनः न जीवति । तस्य मध्येतालु विषग्रन्थिः भवति । यस्या विषं दंशन-वेलयां दंशस्थाने प्रसरन् मारयति जंतून् ।

ह. अपि भुजंगमस्य श्रोत्रे भवतः ?

ग. नहि, तस्य श्रोत्रे न भवतः । स चक्षुर्भ्यामेव शृणोतीति चक्षुःश्रवा इत्युच्यते जनैः ।

ह. ननु कस्यां भूमौ संजायन्ते भुजङ्गमाः ?

ग. विषधरास्ते केवलम् उष्णताप्राधान्येषु देशेषु जायन्त मरुषु तेषां सर्वा अपि जातयः संभवंति ।

ह. ननु सर्पाणां वर्णभेदाः, जातिभेदा वा भवन्ति ?

ग एवम् , सर्पाणां विविधाः वर्णाः, बहवः जातिभेदाश्च भवन्ति । ते कृष्णाः हरिताः कर्बुराश्च,वर्णैः, जातिभिश्च गोनसाः, अजगराः जलव्यालाः, राजिलाश्च इत्यादयः भवंति ।

ह. अपि सपक्षाः अपि भवन्ति सर्पाः ?

ग. एवम् , सपक्षा अपि सर्पाः श्रूयन्ते ।

ह. अपि वर्तते कुत्रापि सर्पानां लोकः ?

ग. एवम् , पातालं नाम सर्पाणां लोकः । तत्र सर्पाणां राजा वासुकिः विराजते ।

ह. किं किं खादन्ति तावद् भुजङ्गमाः ?

ग. भुजंगमाः भेकान् , मूषिकाः पक्षिणः अन्यानपि च क्षुद्रजन्तून् खादन्ति । अजगरास्तु गोमृगमाहिषबलीवर्दानपि निगिलन्ति । उत्तमजातीयाः पन्नगास्तु पवनमेव पिबन्ति ।

ह. ननु कस्मिन् ऋतौ भुजङ्गमाः भूमौ विचरन्ति ?

ग. ते निदाघे वर्षासु शरदि च बहिर्भूत्वा भूमौ विचरन्ति ।

ह. ननु शेषेषु ऋतुषु कुत्र निवसन्ति सर्पाः ?

ग. शेषेषु ऋतुषु ते विलेशया एव तिष्ठन्ति शिशिरं सर्पाणाम् आयासकरं भवति ।

ह. अपि स्वकीयानि विलानि न कुर्वन्ति भुजङ्गाः ?

ग. न हि, ते स्वकीयानि विलानि न कुर्वन्ति । ते हि मूषकाणां विलेषु तरुकोटरेषु गुहासु भग्नभवनेषु च प्रविशन्ति निद्रान्ति च निर्भयम् ।



## अदत्तशुल्केषु ग्राहकेषु

महानुभावाः !

आप लोगों की सेवा में 'बालसंस्कृतम्' निरन्तर उपस्थित होता आ रहा है । तथापि अभीतक आप का शुल्क नहीं पहुंच- है । कितने महानुभावों का तो गतवर्ष का शुल्क भी शेष है । हमने पत्र भी लिखा है और 'बालसंस्कृतम्' के भी प्रत्येक अङ्क में 'शुल्क सत्वरं प्रहेयम्' यह प्रार्थना की गई है । आशा है हिन्दी में दी हुई इस सूचना को ही पढकर शीघ्रातिशीघ्र शुल्क भेजकर अनुगृहीत करेंगे । हम कितनी सेवा कर रहे हैं । हमारे इस श्रमको आप जैसे विद्वानों के अतिरिक्त और कौन समझ सकता है । आप लोग यदि उपेक्षा न करेंगे तो निरन्तर संस्कृत भारती की पूजा होती रहेगी । 'बालसस्कृतम्' आप के दिये हुए शुल्क पर ही निर्भर है । पूर्ण आशा है अब आप शुल्क भेजने में देरी न करेंगे ।

सम्पादकः

सायनश...

...सायनशालायां शास्त्रोक्तविधिना प्र...
दयोगाः-रसाः, उपरसाः, भस्मानि, रसायनानि,
अवलेहाः, सत्वानि, क्षाराणि, द्रवाणि, घृतानि, तैलानि,
अरिष्टाः अन्यानि च शुद्धद्रव्याणि समुचितमूल्येन वैद्यबन्धु...
मुपयोगाय सदैव सज्जानि सन्ति । अप्रस्तुता अपि योगा
आदेशेन त्वरितं निर्माय प्रदीयन्ते ।

निवेदकः-
कविराज वैद्य. रामस्वरूपशास्त्री, आयुर्वेदाचार्यः
( भू. पू. रसवैद्यः, वैद्य. पं. हरिप्रपन्नजी )

पत्रसंकेतः-
श्रीनाथआयुर्वेदरसायनशाला
नाथद्वारा

पत्रसंकेतः-
१४२, भोलेश्वरम् ,
मुंबई २

---

# श्रीनाथऔषधालयः

असाकमौषधालये श्वास-कास-मधुमेह-नपुंसकत्व-सग्रं-हणी-यक्ष्म-श्लीपद-कुष्ठोपदंशोम ादादीनां महारोगाणां निदान-पूर्विका चिकित्सा क्रियते । अधनेभ्यश्च निःशुल्कं दीयते भेषजम् ।

कविराज- वैद्य. रामस्वरूपशास्त्री आयुर्वेदाचार्यः
१४२, भोलेश्वर, बम्बई २

शाखा- ६४, गुलालवाडी बम्बई ४

मुद्रकः अभिनन्दन उपाध्याय श्रीनाथप्रिन्टरी ...म्बई २

ह. न[illegible]न.८५१ [illegible] [illegible]न्ति सर्पाः ?
ग. शे[illegible] [illegible] तिष्ठ[illegible] शिशिरं

ह.
ग



सूचना—जिन छात्रों को सस्कृत सीखने की उ कण्ठा हो वे बालसंस्कृतकार्यालय से पत्र व्यवहार करें । उनक अध्यापन की संपूर्णव्यवस्था की जा सकेगी ।